के उत्कृष्ट स्थान को तुझे पूछता हूं ॥६१॥

इयं वेदिः परोऽअन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः। अयꣳ सोमो वृष्णोऽअश्वस्य रेतः ब्रह्मायं वाचः परमं व्योम ॥६२॥

का॰२०·७·१५· अध्वर्युः यजमानं प्रत्याह। यह वेदि(उत्तरवेदि)पृथिवी की परअवधि है(वेदेः सर्वपृथ्वीरूपत्वात्।यह यज्ञ (अश्वमेध)प्राणिजात का कारण है(यज्ञाद्धै प्रजाः प्रजायन्तऽइति श्रुतेः।यह सोम(सोमलता) अश्व का वीर्य है। यह ब्रह्मा(ऋत्विक्)वाणी(त्रयीरूपा)का परमस्थान है(ब्रह्मणस्त्रिवेदसंयोगात्॥६२॥ ॥ इति ब्रह्मोद्यं समाप्तम् ॥

अ॰११ सुभूः स्वयम्भूः प्रथमोऽन्तर्महत्यर्णवे। दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः॥६३॥

सुभूरिति पूर्वस्य महिम्नः पुरोऽनुवाक्या उत्तरस्य याज्या च। उदिते ब्रह्मोद्यं सम्प्रपद्याध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति तस्य पुरोरुग्घिरण्यगर्भः समवर्तताग्रऽइत्यथास्य पुरोऽनुवाक्या सुभूः स्वयम्भूरिति १३·५·२·२३·श्रुतेः।प्रजापतिदेवत्यानुष्टुप्। पुरुषःमहति अर्णव(कल्पान्तकालीनसमुद्र)के मध्यमें गर्भको स्थापन करताहुआ। कैसा कि सुभू(विश्वोत्पादक)स्वयंभू(स्वेच्छाधृत शरीरः। कैसे गर्भको कि ऋत्वियम्(प्राप्तकालम्)जिस गर्भ से प्रजापति ब्रह्मा उत्पन्न हुआ॥६३॥

होता यक्षत्प्रजापतिꣳ सोमस्य महिम्नः। जुषतां पिबतु सोमꣳ होतर्यज ॥६४॥

प्राजापत्यः महिम्नः प्रैषः। होता यक्षत्प्रजापतिमिति प्रैष इति १३·५·२·

२३॰श्रुतेः।यजुः।महिम संज्ञक सोमग्रह के सम्बन्धि प्रजापति को देव्योहोता यजन करे। इज्यमान वोह प्रजापति सेवन करे और सोम(महिम ग्रह) को पीवै। हे मनुष्य होतः तूभी यजन करि॥६४॥

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो॰ऽअस्तु वयँ स्याम पतयो रयीणाम्॥६५॥

इतिसँहितायामेकादशोऽनुवाकः११

इति श्री शुक्लयजुषिमाध्यन्दिनीयायांवाजसनेयसँहितायां दीर्घे पाठे त्रयो विँशोऽध्यायः॥२३॥

पूर्वस्य महिम्नो याज्या। प्रजापतेन त्वदेतान्यन्य इति होता यजतीति-२३॰५॰२॰२३॰श्रुतेः। हिरण्यगर्भदृष्टा प्रजापतिदेवत्या त्रिष्टुप्। दशमे ऽध्याये २०॰अ॰यजुर्मध्या व्याख्याता अत्र तु त्वरगियम्॥६५॥

इति भाष्ये एकादशोऽनुवाकः ११

श्रीवेदार्थ प्रदीपेन तमोहार्दं निवारयन्
पुमार्थांश्चतुरो देया धर्मपुत्रो युधिष्टिरः२३

श्रीमच्छुक्ल यजुर्वेदान्तर्गतमाध्यन्दिनी शाखाध्येतृ व्याघ्रपादान्वय विश्वामित्रपुराधिप श्रीमज्जयकिशोर देव वर्म्मात्मज रौक्मिणेय नृपतिगिरिप्रसादेन रचिते श्रीवेदार्थ प्रदीपे गिरिधरभाष्ये आश्वमेधिकस्त्रयोविँशोऽध्यायः॥२३॥

हरिःओम्
ओंनमोयज्ञपुरुषाय

पञ्चात्मकं द्विरूपं च साधनैर्बहुरूपकम्

स्वानंददायकं कृष्णं ब्रह्मरूपं परं स्तुमः २४

अ०१ अश्वस्तूपरो गोमृगस्ते प्राजापत्याः कृष्णग्रीव आग्नेयो रराटे पुरस्तात्सारस्वती मेष्यधस्ताद्धन्वोराश्विनावधोरामौ बाह्वोः सौमापौष्णः श्यामो नाभ्याठं सौर्ययामौ श्वेतश्च कृष्णश्च पार्श्वयोस्त्वाष्ट्रौ लोमशसक्थौ सक्थ्योर्वायव्यः श्वेतः पुच्छ इन्द्राय स्वपस्याय वेहद्वैष्णवो वामनः ॥१॥

ॐ नमो याज्ञवल्काय

गिरिप्रसादसंगेन वेदभाष्ये समीर्यते

वेदनेत्रमितोऽध्यायो देवतापशुवाचकः २४

श्रुतिरूपमन्त्रा आश्वमेधिकानां पशूनां देवतासम्बन्धविधायिनोऽध्यायेनोच्यन्ते॥ का०२०।६।२-५। अग्निष्ठेऽश्वतूपरगोमृगान्नियुनक्ति यथोक्तमश्वादौ देवताः यथाश्वस्तूपरोऽध्यायः पर्यङ्ग्यानश्वे पञ्चदश पञ्चदश रोहितादीन्त्सौर्यान्तानितरेषु॥ तत्राश्वमेधे एकविंशतिर्यूपाः सन्ति तत्र मध्यमो यूपोऽग्निष्ठसंज्ञः तत्र सप्तदश पशवो नियोजनीयाः तान्देवतासम्बन्धकथनपूर्वकमाह। अश्वस्तूपरो गोमृगस्ते प्राजापत्याः। अश्वः तूपरः (शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनः) गोमृगः (गवयः) एते प्रजापतिदेवताः ततः प्रजापतये जुष्टं नियुनज्मीति मन्त्रेण बन्धनीयाः। एवमग्रेऽपि यो यद्देवत्यः पशुः सः असुष्मै जुष्टं नियुनज्मीत्यादिमन्त्रैर्बन्धनीयः॥ आग्नेयोऽग्निदेवतः कृष्णग्रीवः श्यामव-

एगलोऽजः अश्वस्य पुरस्तात् ललाटे उपायेन बन्धनीयः। हन्वोरस्या-
त्सारस्वती मेषी बन्ध०। आश्विनावधोरामौ अधोभागे शुक्लवर्णौ वर्जौ
बाह्वोः अश्वस्य पूर्वपादयोरेकैकः। सोमपूषदेवत्यः श्यामः शुक्लकृष्ण-
रोमाजोऽश्वस्य नाभ्यां बन्ध०। श्वेतः कृष्णश्च सौर्ययामौ श्वेतः पशुः सू-
र्यदेवतो दक्षिणपार्श्वे बन्ध०यमदैवतः कृष्णोऽश्ववामपार्श्वे। त्वाष्ट्रौ त्व-
ष्टृदेवतौ लोमशसक्थौ बहुरोमपुच्छिकौ पशू अश्वस्य सक्थ्योरूर्वोः प-
श्चात्पदयोरेकैकः। वायव्यः श्वेतवर्णः पशुरश्वस्य पुच्छे। स्वपस्याय शो-
भनकर्मणे इन्द्राय स्वपस्येन्द्रदेवता वेहत् गर्भघातिनी वैष्णवो वाम-
नः पशुश्च पुच्छऽएव अङ्गान्तरानुक्तेः॥ एवमश्वादिभिः सह पञ्चदश
भवन्ति एते पर्यङ्ग्या उच्यन्ते। अत्राश्वस्य शरीरं नरणाय तुंबीफलवद्र-
ज्जुं बद्ध्वा गुम्फनीयम् ततः कृष्णग्रीवः आग्नेयौ रराटऽइत्यादयोऽश्व-
स्य शरीरे यथोक्तस्थाने सम्बद्धायां रज्ज्वां बन्धनीयाः ततो रोहितोधूम्र-
रोहित इत्यादयो द्वादशसंख्याकाः शितिबाहुरन्यन्तःशितिबाहुः समन्त-
शितिबाहुस्ते बार्हस्पत्या इत्यन्ता मध्यमे एव यूपे नियोज्याः सप्तदशैव
पशून्मध्ये यूपऽआलभतऽइति १३·५·१·१५· श्रुतेः तत्र त्रयोऽश्वतूपर-
गोमृगाः द्वौ चाग्नेयावेकादशिनौ द्वादश रोहितादयः एवं सप्तदश म-
ध्यमे यूपे। ततः पृषती क्षुद्रपृषतीत्यादीनां श्वेताः सौर्या इत्यन्तानां १८+
शततय संख्याकानां पशूनां मध्ये पञ्चदश-पञ्चदश पशूनेकैकस्मिन्यू-
पे युनक्ति। एवमितरेषु यूपेषु पञ्चदश-पञ्चदशैते पशवः एकैकश्चै-
कादशिनः। एवं मध्यमयूपव्यतिरिक्तेषु विंशतियूपेषु षोडश-षोडश
पशवो भवन्ति षोडश-षोडशेतरेष्विति १३·५·१·१५· श्रवणात्॥१॥

+ २६·५८·५६· द्वावेकादशिन्योपशवउक्ताः

रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते सौम्या बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणाः शितिरन्ध्रोऽन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रस्ते सावित्राः शितिबाहुरन्यतःशितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्याः पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः ॥२॥

रोहितः सर्वरक्तः धूम्ररोहितः धूम्रबर्णमिश्रो रक्तः तृतीयः कर्कन्धुरोहितः बदरसदृशरक्तः ते त्रयः सौम्याः सोमदेवत्याः सोमाय जुष्टं नियुनज्मीत्यादिमन्त्रेण प्रत्येकं मध्यमे यूपएव नियोज्याः। ततो बभ्रुःकपिलवर्णः अरुणबभ्रुः अरुणबर्णमिश्रः कपिलः शुकबभ्रुः शुकपक्षिसमवर्णः कपिलश्च ते त्रयो वारुणाः वरुणदेवत्याः मध्यमयूपएव। शिति कृष्णं रन्ध्रं छिद्रं यस्य स शितिरन्ध्रः अन्यतइत्येकपार्श्वे शितिरन्ध्रः एते सारस्वताः मध्यमे एव। शितिबाहुः श्वेतपूर्वपादः अन्यतःशितिबाहुः एकस्मिन्नेव पार्श्वे शितिपादः समन्तशितिबाहुः सर्वश्वेतबाहुः शिती धवलमेचकौ एते बार्हस्पत्याः बृहस्पतिदेवत्याः मध्यमे एव॥ ॥अथ द्वितीययूपे। पृषती विचित्रवर्णविन्दुयुक्तशरीरा क्षुद्रपृषती सूक्ष्मविचित्रविन्दुयुक्ता स्थूलपृषती स्थूलविचित्रविन्दुयुक्ता एते स्त्रीपशवो मित्रावरुणदेवताः द्वितीये यूपे नियोज्याः॥२॥

शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामा अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः ॥३॥

शुद्धवालः शुभ्रवालः सर्वशुद्धवालः मणिशुद्धवालः मणिवर्णकेशः

ते त्रय अश्विदेवत्याः द्वितीये। श्येतः श्वेतवर्णः श्येताक्षः श्वेतनेत्रः अरुणः रक्तः ते त्रयोरुद्राय पशुपतये पशुपतिरुद्रदेवता द्वितीये। कर्णास्त्रयः पशुविशेषाः कर्णश्चन्द्रे च वृक्षे चेति विश्वोक्तेः कर्णश्चन्द्रसदृश श्वेत कर्णास्त्रयः पशवः बहुवचनस्य त्रित्वे पर्यवसानात् यामाः यमदेवताः द्वितीये। अवलिप्ताः सगर्वास्त्रयो रौद्राः। एते द्वितीये पञ्चदश॥ ॥अथ तृतीये यूपे। नभोरूपाः आकाशवन्नीलवर्णाः पार्जन्याः पर्जन्यदेवताः पशवस्तृतीये नियोज्याः॥३॥

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गूर्लोहितोर्णी पलक्षी ताः सारस्वत्यः प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्त उषस्याः॥४॥

पृश्निः विचित्रवर्णः तिरश्चीनानि पृश्नीनि बिंदवो यस्य सः एवमूर्ध्वानि पृश्नीनि यस्य सः ते त्रयो मारुताः मरुद्देवत्यास्तृतीये। फल्गूः अपुष्टशरीरा लोहितोर्णी रक्तरोमवती पलक्षी श्वेता पलक्षशब्दो वलक्षार्थः श्वेतपर्यायः तास्तिस्रोऽजाः सारस्वत्यः सरस्वतीदेवतास्तृतीये। प्लीहाकर्णः प्लीहा रोगविशेषः तद्युक्तौ कर्णौ यस्य स प्लीहकर्णः अन्येषामपि दृश्यत इति पा॰६·३·१३७· संहितायां दीर्घः शुण्ठकर्णः ह्रस्वकर्णः अध्यालोहकर्णः रक्तवर्णकर्णः ते त्रयस्त्वाष्ट्राः त्वष्टृदेवतास्तृतीये। कृष्णग्रीवः शितिकक्षः श्वेतकक्षः अञ्जिसक्थः अञ्जि पुण्ड्रं सक्थ्नोरूर्वोर्यस्य सः ते त्रय ऐन्द्राग्नाः इन्द्राग्नि देवताः तृतीये। पञ्चदश पूर्णाः॥ ॥अथचतुर्थे। कृष्णाञ्जिः कृष्णपुण्ड्रः अल्पाञ्जिः महाञ्जिः अल्पम

ञ्जि यस्य स तथा ते त्रय उषस्याः उषोदेवताश्चतुर्थे यूपे नियोज्याः॥४॥

शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचेऽविज्ञाता अदित्यै सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः॥५॥

विचित्रवर्णास्तिस्रः स्त्रीपशवो वैश्वदेव्यः विश्वदेवदेवताश्चतुर्थे। रोहिण्यः रक्तवर्णाः त्र्यवयः सार्धसंवत्सरास्तिस्रोऽजावाचे वाग्देवताश्चतुर्थे। अविज्ञाताः कृष्णग्रीवादिचिन्हविज्ञानशून्यास्त्रयः पशवोऽदित्यै अदितिदेवताश्चतुर्थे। सरूपाः समानरूपास्त्रयः पशवो धात्रे धातृदेवताश्चतुर्थे। एवं पञ्चदश॥ ॥अथ पञ्चमे यूपे तिस्रो वत्सतर्यः बालछाग्यो देवानां पत्नीभ्यः तद्देवताः पञ्चमे॥५॥

कृष्णग्रीवा आग्नेयाः शितिभ्रवो वसूनाꣳरोहिता रुद्राणाꣳ श्वेता अवरोकिण आदित्यानां नभोरूपाः पार्जन्याः॥६॥

कृष्णग्रीवाः कालकण्ठास्त्रयः पशव आग्नेयाः अग्निदेवताः पञ्चमे। शितिभ्रवः श्वेतवर्णभ्रूयुक्तास्त्रयो वसूनां वसुदेवताः पञ्चमे। रोहिताः रक्तवर्णास्त्रयः रुद्राणां रुद्रदेवताः पञ्चमे। श्वेताः अवरोकिणः अवलोकिनः यद्वा अवाधस्ताद्रोकः छिद्रं येषां ते छिद्रं निर्व्यथनं रोकः ते त्रयः आदित्यानां तद्देवताः पञ्चमे॥ ॥अथ षष्ठेयूपे। नभोरूपाः पार्जन्यास्त्रयः षष्ठे॥६॥

उन्नत ऋषभो वामनस्तऽऐन्द्रावैष्णवा उन्नतः शितिबाहुः शितिपृष्ठस्तऽऐन्द्राबार्हस्पत्याः शुकरूपा वाजिनाः कल्माषा आग्निमारुताः श्यामाः पौष्णाः॥७॥

उन्नतः उच्चः ऋषभः पुष्टः वामनः बहून्यपि वयसि गते वृद्धि-

रहितः ते त्रय ऐन्द्रा वैष्णवाः इन्द्रविष्णुदेवताः षष्ठे। उन्नतः शितिबाहुः श्वेतपूर्वपादः शितिपृष्ठः श्वेतपृष्ठः ते त्रयः ऐन्द्राबार्हस्पत्याः इन्द्रबृहस्पतिदेवताः षष्ठे। शुकरूपाः शुकपक्षिसमवर्णाः त्रयोवाजिनाः वाजिदेवताः षष्ठे। कल्माषाः कर्बुरास्त्रयः पशव आग्निमारुताः षष्ठे। एवं पञ्चदश॥ ॥अथ सप्तमे यूपे। श्यामाः शुक्लकृष्णवर्णाः पौष्णाः पूषदेवताः सप्तमे॥७॥

एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीया वामना अनड्वाह

आग्नावैष्णवा वशा मैत्रावरुण्योऽन्यत एन्यो मैत्र्यः॥८॥

एताः कर्बुरवर्णास्त्रय इन्द्राग्निदेवताः सप्तमे। द्विरूपाः वर्णद्वयोपेतास्त्रयः अग्नीषोमीयाः अग्निसोमदेवत्याः सप्तमे। वामना अनड्वाहः त्रय आग्नावैष्णवाः अग्निविष्णुदेवत्याः सप्तमे। वशाः वन्ध्याः तिस्रोऽजाः मैत्रावरुण्यः तद्देवताः सप्तमे॥ ॥अथाष्टमे यूपे। अन्यतएन्यः एकपार्श्वे कर्बुरवर्णास्तिस्रोऽजा मैत्र्यः मित्रदेवत्याः अष्टमे॥८॥

कृष्णग्रीवा आग्नेया बभ्रवः सौम्याः श्वेता वायव्या

अविज्ञाता अदित्यै सरूपा धात्रे वत्सतर्यो देवानां

पत्नीभ्यः॥९॥

कृष्णग्रीवा आग्नेयास्त्रयः अष्टमे। बभ्रवः कपिलवर्णास्त्रयः सौम्याः सोमदेवत्याः अष्टमे। श्वेतास्त्रयः वायव्याः वायुदेवत्याः अष्टमे। अविज्ञाताः चिन्हाविशेषेणाज्ञातास्त्रयः अदितिदेवत्याः अष्टमे॥ ॥अथ नवमे। सरूपाः धातृदेवत्याः नवमे। वत्सतर्यः देव

पत्नी देवत्यास्तिस्रः नवमे ॥९॥

कृष्णा भौमा धूम्रा आन्तरिक्षा बृहन्तो दिव्याः शबला वैद्युताः सिध्मास्तारकाः ॥१०॥

कृष्णाः भौमाः भूमिदेवत्यास्त्रयः नवमे। धूम्रवर्णास्त्रयः अन्तरिक्षदेवत्याः नवमे। बृहन्तो महान्तस्त्रयः दिव्याः द्युदेवत्याः नवमे॥ ॥अथ दशमे। शबलाः कर्बुरास्त्रयः वैद्युताः विद्युद्देवत्याः दशमे। सिध्माः सिध्माख्यरोगवन्तस्त्रयः तारकाः नक्षत्रदेवत्याः दशमे ॥१०॥

अ० २ धूम्रान्वसन्तायालभते श्वेतान्ग्रीष्माय कृष्णान्वर्षाभ्यो ऽरुणाञ्छरदे पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय ॥११॥

धूम्रवर्णान् त्रीनजान् वसन्ताय वसन्तदेवतानालभते नियुनक्ति दशमे। श्वेतान् त्रीन्ग्रीष्माय दशमे। कृष्णवर्णान् त्रीन्वर्षाभ्यः दशमे॥ ॥अथैकादशे। अरुणान् रक्तान् त्रीन् शारदे एकादशे। पृषतः नानावर्णबिन्दुयुक्तान् त्रीन्हेमन्ताय एकादशे। पिशङ्गान् लोहितमिश्रकापिलवर्णान् त्रीन् शिशिराय एकादशे ॥११॥

त्र्यवयो गायत्र्यै पञ्चावयस्त्रिष्टुभे दित्यवाहो जगत्यै त्रिवत्सा अनुष्टुभे तुर्यवाह उष्णिहे ॥१२॥

सार्धसंवत्सरास्त्रयः गायत्र्यै एकादशे। सार्धद्विसंवत्सरास्त्रयः त्रिष्टुभे एकादशे॥ ॥अथ द्वादशे यूपे। दित्यवाहः द्विसंवत्सरास्त्रयो जगत्यै द्वा०। त्रिवत्साः त्रिवर्षाः त्रयोऽनुष्टुभे द्वा०। तुर्यवाहः सार्धत्रिसंवत्सरास्त्रय उष्णिहे द्वा० ॥१२॥

पष्ठवाहो विराजऽउक्षाणो बृहत्याऽऋषभाः ककुभेऽनड्वाहः पङ्क्त्यै धेनवोऽतिच्छन्दसे ॥२३॥

पष्ठवाहः चतुःसंवत्सरास्त्रयो विराजे द्वा०। उक्षाणः सेचनसमर्थो युवानस्त्रयः बृहत्यै द्वा०॥ ॥अथ त्रयोदशे यूपे। ऋषभाः उक्ष्णोऽप्यधिकवयस्काः त्रयः ककुभे त्रयोदशे। अनड्वाहः शकटवहनसमर्था अजास्त्रयः पङ्क्त्यै त्रयो०। धेनवः नवप्रसूता अजास्तिस्रः अतिछन्दसे त्रयो० ॥२३॥

कृष्णग्रीवा आग्नेया बभ्रवः सौम्या उपध्वस्ताः सावित्रा वत्सतर्यः सारस्वत्यः श्यामाः पौष्णाः पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः ॥२४॥

अथ चातुर्मास्यदेवाः पशवः श्वेताः सौर्या इत्यन्ताः। तत्र प्रथमं वैश्वदेवपर्वपशव उच्यन्ते। कृष्णग्रीवाः त्रयः आग्नेयाः त्रयो०। बभ्रवः कपिलास्त्रयः सौम्याः॥ ॥अथ चतुर्दशे यूपे। उपध्वस्ताः उपध्वंसनमधः पतनं तद्गुणविशिष्टा वर्णान्तरभिश्रिता वा त्रयः सवितृदेवताः चतु०। वत्सतर्यः तिस्रः सरस्वती देवताः चतु०। श्यामाः शुक्लकृष्णवर्णाः पौष्णाः पूषदेवत्याः चतु०। पृश्नयः तनुकाया विचित्रवर्णा वा त्रयो मरुद्देवताः चतु०। बहुरूपास्त्रयो वैश्वदेवाः चतु०॥ ॥अथ पञ्चदशे। वशाः वन्ध्यास्तिस्रो द्यावापृथिवीयाः द्यावापृथिवी देवत्याः पञ्च०॥२४॥

उक्ताः संचरा एता ऐन्द्राग्नाः कृष्णा वारुणाः पृश्नयो मारुताः कायास्तूपराः ॥२५॥

अथ वरुणप्रघासपर्वपशव उच्यन्ते। संचर शब्देन कृष्णग्रीवा आग्नेया इत्यादयः पूर्वकण्डिकोक्ताः पञ्चदश पशव उच्यन्ते पञ्च संचराणि हवींषि भवन्तीति वत् यथा चातुर्मास्येषु चतुर्ष्वपि पर्वसु आग्नेयादीनि पञ्च हवींषि समानानि एवमत्रापि चतुर्णां पर्वणां सम्बन्धिनां आद्यानां पञ्चानां देवानामाद्या एते पञ्चदश पशवः समाना एव भवन्ति। तेन संचरा उक्ताः आग्नेयादयः पञ्चदश पशव उक्ता इत्यर्थः। आग्नेयाः कृष्णग्रीवास्त्रयः पञ्चदशे। सौम्याः बभ्रवस्त्रयः पञ्च॰। सावित्रा उपध्वस्ता त्रयः पञ्च॰। सारस्वत्यः वत्सतर्यः तिस्रः पञ्च॰॥ ॥अथ षोडशे। पौष्णाः श्यामाः त्रयः षोडशे। ऐते संचराः उक्ताः। एताः कर्बुरास्त्रय ऐन्द्राग्नाः इन्द्राग्निदेवताः षो॰। पृश्नयः तनुशरीरास्त्रयः मारुताः षो॰। त्रयः तूपराः निःशृङ्गाःकायाः कदेवताः षो॰॥१५॥

अग्नयेऽनीकवते प्रथमजानालभते मरुद्भ्यः सांतपनेभ्यः सवात्यान्मरुद्भ्यो गृहमेधिभ्यो बष्किहान्मरुद्भ्यः क्रीडिभ्यः सꣳसृष्टान्मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान्॥१६॥

अथ सप्तदशे। अथ साकमेधपशवः। प्रथमजान् मात्रा प्रथमगर्भे जातान् त्रीन् अजान् अनीकवते अनीकवद्गुणविशिष्टायाग्नये आलभते नियुनक्ति सप्त॰। वातसमूहो वात्या तया सह वर्तन्तऽइति सवात्याः वातमण्डलीमध्यस्थान् त्रीनजान् सांतपनेभ्यः मरुद्भ्यः सप्त॰ बष्किहान् चिरप्रसूतान् त्रीन्गृहमेधिभ्यो मरुद्भ्यः सप्त॰। संसृष्टान् सहसृष्टान् त्रीन् क्रीडिभ्यो मरुद्भ्यः सप्त॰। अनु

सृष्टान् अनु क्रमणेजातान् त्रीन् स्वतवद्भ्यो मरुद्भ्यः सप्त०॥१६॥

उक्ताः संचरा एता ऐन्द्राग्नाः प्राशृङ्गा माहेन्द्रा बहुरूपा वैश्वकर्मणाः ॥१७॥

अथाष्टादशे यूपे।महाहविः पशवः कृष्णग्रीवादयः पञ्चदश पूर्ववत्॥ ॥अथैकोनविंशतितमे।एताः कर्बुरास्त्रय ऐन्द्राग्नाः एकोन०। प्राशृङ्गाः संहितायां दीर्घः प्रकृष्टशृङ्गयुक्ता माहेन्द्रदेवताः एकोन०। बहुरूपास्त्रयो वैश्वकर्मणाः विश्वकर्मदेवताः एकोन०॥१७॥

धूम्रा बभ्रुनीकाशाः पितॄणाᳫं सोमवतां बभ्रवो धूम्रनीकाशाः पितॄणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः ॥१८॥

अथ पित्र्येष्टिदेवतापशवः। धूम्राः कृष्णवर्णमिश्रा लोहितवर्णाः बभ्रुनीकाशाः कपिलवर्णसदृशास्त्रयः पशवः सोमवतां पितॄणां नियोज्याः एकोन०। बभ्रवः कपिलाः धूम्रनीकाशाः धूम्रा इव नितरां काशन्ते इति तादृशास्त्रयः बर्हिषदां पितॄणामेकोन०॥ ॥अथ विंशे यूपे। कृष्णाः बभ्रुनीकाशाः अग्निष्वात्तानां पितॄणांविंशे। कृष्णाः पृषन्तः बिन्दुयुक्ताः त्रैयम्बकाः त्र्यम्बकदेवताः विंशे॥१८॥

उक्ताः संचरा एताः शुनासीरीयाः श्वेता वायव्याः श्वेताः सौर्याः ॥१९॥

अथ शुनासीरीयपशवः। तत्र संचराः आग्नेयादयः पञ्चदशोक्ताः। तेन कृष्णग्रीवा आग्नेयाः विंशे। बभ्रवः सौम्याः विंशे। उपध्वस्ताः सावित्राः विंशे॥ ॥अथैकविंशे यूपे। वत्सतर्यः सारस्वत्यः ए-

कविंशे। श्यामाः पौष्णाः एक०। एताः कर्बुराः शुनासीरीयाः शुनारदेवताः एक०। श्वेताः त्रयो वायव्याः वायुदेवत्याः एक०। श्वेताः त्रयः सौर्याःसूर्यदेवताः एक०॥ एवं समाम्नाः यूपाः इत्यश्वाद्याः सौर्यान्ताः सप्तविंशत्यधिकशतत्रयं ३२७ग्राम्याः पशवः सर्वे उक्ताः॥१९॥

वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्वर्षाभ्यस्तित्तिरीञ्छरदे वर्तिका हेमन्ताय ककराञ्छिशिराय विककरान्॥२०॥

अथारण्याः पशव उच्यन्ते॥ का०२०६.६. कपिञ्जलादीन्पृषतान्तांस्त्रयोदश-त्रयोदश यूपान्तरेषु। अत्रैकविंशतिर्यूपाः तेषां यूपानां विंशतिरन्तरालानि तेष्वन्तरालेषु अन्तरालोत्पत्तिक्रमेण कपिञ्जलादयस्त्रयोदश-त्रयोदश पशव आलम्भनीयाः। अत्र यूपान्तरालेष्वारण्यपशूनां बन्धनोपाय उक्तो मानवसूत्रे नाडीषु सुषिमशकान् करण्डेषु सर्पान् पञ्जरेषु मृगव्याघ्रसिंहान् कुम्भेषु मकरमत्स्यमण्डूकान् जालेषु पक्षिणः कारासु हस्तिनो नौषु चौदकानि यथार्थमितराणीति। ये पशवो येनोपायेन यूपान्तरालेषु तिष्ठन्ति ते तेनोपायेन स्थापनीया इति तात्पर्यम्॥ अत्र येषामारण्यजीववाचिपदानामर्थो नज्ञायन्ते ते निगमनिरुक्तनिघण्टुव्याकरणोणादिइत्यभिधानग्रन्थेभ्यो विलोक्यावगन्तव्याः आटवीकेभ्यश्च लक्षणीयाः॥ तत्र प्रथमोत्पन्ने यूपान्तराले त्रीन्कपिञ्जलान्वसन्ताय आलभते नियुनक्ति। त्रीन्कलविङ्कान् चटकान्ग्रीष्माय। तित्तिरीन् त्रीन्वर्षाभ्यः। वर्तिकाः पक्षिविशेषान् शरदे। त

तस्त्रयाणां ककराणां मध्ये एकं ककरं हेमन्ताय॥ ॥अथ द्वितीये ऽवकाशे शिष्टौ द्वौ ककरौ पक्षिविशेषौ हेमन्ताय। त्रीन्विककरान् शिशिराय॥२०॥

अ०३ समुद्राय शिशुमारानालभते पर्जन्याय मण्डूकानद्भ्यो मत्स्यान्मित्राय कुलीपयान्वरुणाय नाक्रान्॥२१॥

त्रीन् शिशुमारान् जलचरजन्तून्समुद्रायालभते। त्रीन्मण्डूकान्भेकान्पर्जन्याय। त्रयाणां मत्स्यानां मध्ये द्वौ अद्भ्यः॥ ॥अथ तृतीयाऽवकाशे एकं शिष्टं मत्स्यमद्भ्यः। त्रीन्कुलीपयान् जलजान्मित्राय। त्रीन्नाक्रान् नक्रा एव नाक्रास्तान् जलचरान् वरुणाय॥२१॥

सोमाय हꣳसानालभते वायवे बलाका इन्द्राग्निभ्यां क्रुञ्चान्मित्राय मद्गून्वरुणाय चक्रवाकान्॥२२॥

त्रीन् हंसान्सोमाय। तिस्रो वलाकाः वकपत्नीः वायवे॥ ॥अथ चतुर्थेऽवकाशे। त्रीन् क्रुञ्चान्पक्षिणः इन्द्राग्निभ्यां। त्रीन्मद्गून् जलकाकान्मित्राय। त्रीन् चक्रवाकान्वरुणाय॥२२॥

अग्नये कुटरूनालभते वनस्पतिभ्य उलूकानग्नीषोमाभ्यां चाषानश्विभ्यां मयूरान्मित्रावरुणाभ्यां कपोतान्॥२३॥

त्रीन्कुटरून् कुक्कुटानग्नये। ततस्त्रयाणामुलूकानां मध्ये एकमुलूकं वनस्पतिभ्यः॥ ॥अथ पञ्चमेऽवकाशे द्वौ उलूकौ काकवैरिणौ। त्रीन् चाषानग्नीषोमाभ्यां त्रीन्मयूरानश्विभ्यां त्रीन्कपोतान्मित्रावरुणाभ्याम्॥२३॥

सोमाय लबानालभते त्वष्ट्रे कौलीकान्गोषादीर्देवानां पत्नीभ्यः कुलीका देवजामिभ्योऽग्नये गृहपतये पारुष्णान् ॥२४॥

त्रयाणां लबानां लावकानां मध्ये द्वौ सोमाय॥ ॥अथ षष्ठेऽवकाशे एकं लवं सोमाय। कौलीकान्पक्षिणः त्वष्ट्रे। तिस्रो गोषादीः गवां सादयित्रीः पक्षिणीः देवानां पत्नीभ्यः। तिस्रः कुलीकाः पक्षिणीः देवजामिभ्यः देववधूभ्यः जामिस्वसृकुलस्त्रियोः। त्रीन्पारुष्णासंज्ञान्गृहपतयेऽग्नये॥२४॥

अह्ने पारावतानालभते रात्र्यै सीचापूरहोरात्रयोः संधिभ्यो जतूर्मासेभ्यो दात्यौहान्त्संवत्सराय महतः सुपर्णान् ॥२५॥

अथ सप्तमेऽवकाशे। त्रीन्पारावतान्कलरवानह्ने तिस्रः सीचापूः पक्षिणीः रात्र्यै तिस्रो जतूः पात्राख्याः पक्षिणीः अहोरात्रयोः संधिभ्यः। त्रीन्दात्यूहान् कालकण्ठान्मासेभ्यः त्रयाणां महतां सुपर्णानां मध्ये एकं संवत्सराय॥ ॥अथाष्टमेऽवकाशे द्वौ महान्तौ सुपर्णौ संवत्सराय॥२५॥

भूम्याऽआखूनालभतेऽन्तरिक्षाय पाङ्क्त्रान्दिवे कशान्दिग्भ्यो नकुलान्बभ्रुकानवान्तरदिशाभ्यः॥२६॥

भूम्यै आखून्मूषकान् त्रीन् पाङ्क्त्रान् मूषकजातिविशेषानन्तरिक्षाय काशान् तद्भेदानेव दिवे त्रीन्नकुलान्दिग्भ्यः तत्र द्वौ अष्टमे॥ ॥अथ नवमे एकम्। त्रीन्बभ्रुकानवान्तरदिशाभ्यः॥२६॥

वसुभ्य ऋश्यानालभते रुद्रेभ्यो रुरूनादित्येभ्यो न्यङ्कून्विश्वेभ्यो देवेभ्यः पृषतान्त्साध्येभ्यः कुलुङ्गान्॥२७॥

त्रीनृष्यान् वसुभ्यः ऋष्यादयो मृगविशेषाः। रुद्रेभ्यः रुरून्। त्रीन्न्यङ्कूनादित्येभ्यः॥ ॥अथ दशमेऽवकाशे त्रीन्पृषतान्विश्वेभ्यो देवेभ्यः त्रीन्कुलङ्गान् साध्येभ्यः॥२७॥

ईशानाय परस्वत आलभते मित्राय गौरान्वरुणाय महिषान्बृहस्पतये गवयाँस्त्वष्ट्र उष्ट्रान्॥२८॥

परस्वतः मृगविशेषानीशानाय। त्रीन्गौरान्मृगान्मित्राय त्रीन्महिषान्वरुणाय तत्रैकं दशमे॥ ॥अथैकादशेऽवकाशे द्वौ महिषौ त्रीनाजयानीशानारण्यपशून्बृहस्पतये त्रीनुष्ट्रान्त्वष्ट्रे॥२८॥

प्रजापतये पुरुषान्हस्तिन आलभते वाचे प्लुषीँश्चक्षुषे मशकाञ्छ्रोत्राय भृङ्गाः॥२९॥

प्रजापतये पुरुषान्हस्तिनः त्रीन्। त्रीन्प्लुषीन्चक्रतुण्डान्वाचे तन्मध्ये द्वे प्लुषी एकादशे॥ ॥अथ द्वादशेऽवकाशे एकं प्लुषिम्। त्रीन्मशकान् चक्षुषे। त्रयो भृङ्गाः श्रोत्राय नियोज्याः॥२९॥

प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय कृष्णो मनुष्यराजाय मर्कटः शार्दूलाय रोहिदृषभाय गवयी क्षिप्रश्येनाय वर्तिका नीलङ्गोः कृमिः समुद्राय शिशुमारो हिमवते हस्ती॥३०॥

प्रजापतये च वायवे च एको गोमृगः गवयः। एक आरण्यो मेषो वरुणाय। एकः कृष्णो मेषो यमाय। एको मर्कटः मनुष्यराजाय। एको रोहिदृष्यः शार्दूलाय। एका गवयी ऋषभाय तदाख्यदेवाय॥ ॥अथ त्रयोदशेऽवकाशे एकावर्तिः क्षिप्रश्येनाय देवाय। एकः कृमिः

कीटः नीलंगोः नीलंगवे। शिशुमारः एको जलचरः समुद्राय। हस्ती हिमवते॥३०॥

अ॰४ मयुः प्राजापत्य उलो हलिक्ष्णो वृषदꣳशस्ते धात्रे दिशां कङ्को धुङ्क्षाग्नेयी कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा वाचे क्रुञ्चः॥३१॥

मयुः प्राजापत्यः तुरगवदनः किंनरः प्रजापतिदेवतः। उलो मृगविशेषः हलिक्ष्णः सिंहविशेषः वृषदंशो विडालः ते त्रयो धात्रे एकः कङ्कः बकः दिशां दिग्भ्यः। एका धुङ्क्षा पक्षिणी आग्नेयी अग्निदेवत्या। कलविङ्कः चटकः लोहिताहिः रक्तवर्णसर्पः पुष्करसादी पुष्करे सीदतीति कमलभक्षी पक्षिविशेषः ते त्रयः त्वाष्ट्राः त्वष्टृदेवताः॥ ॥अथचतुर्दशोऽवकाशे एकः क्रुञ्चः वाचे॥३१॥

सोमाय कुलङ्ग आरण्योऽजो नकुलः शका ते पौष्णाः क्रोष्टा मायोरिन्द्रस्य गौरमृगः पिद्वो न्यङ्कुः कक्कटस्तेऽनुमत्यै प्रतिश्रुत्कायै चक्रवाकः॥३२॥

कुलङ्गः कुरङ्गो हरिण एकः सोमाय। आरण्यो वनजोऽजश्छागः नकुलः शका शकुन्तिः एते त्रयः पौष्णाः पूषदेवत्याः। क्रोष्टा शृगालो मायोरिन्द्रस्य। एको गौरमृगः इन्द्रस्य। पिद्वो मृगविशेषः न्यङ्कुः अपि कक्कटः स एव ते त्रयोऽनुमत्यै। चक्रवाकः प्रतिश्रुत्कायै॥३२॥

सौरी बलाका शार्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यै शारिः पुरुषवाक् श्वाविद्भौमी शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शुकः पुरुषवाक्॥३३॥

बलाका बकस्त्री सूर्यदेवत्या। शार्गः पक्षिविशेषः॥ ॥अथ पञ्चदशोऽवकाशो सृजयः पक्षिविशेषः शयाण्डकोऽपि ते मैत्राः मित्रदेवत्याः पुरुषवाक् मनुष्यवद्वादिनी शारिः शुकी सरस्वत्यै। श्वावित् सेधा भौमी भूदेवत्या शार्दूलो व्याघ्रः वृकः चित्रकः पृदाकुः सर्पः ते त्रयो मन्यवे। पुरुषवाक् शुकः सरस्वते समुद्राय॥३३॥

सुपर्णः पार्जन्य आतिर्वाहसो दर्विदा ते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोऽलज आन्तरिक्षः प्लवो मद्गुर्मत्स्यस्ते नदीपतये द्यावापृथिवीयः कूर्मः॥३४॥

सुपर्णः गरुत्मान्पर्जन्यः पर्जन्याय आतिः आडी वाहसः दार्विदा काष्ठकुट्टः ते त्रयः पक्षिविशेषाः वायवे। बृहस्पतये वाचस्पतये वाचो वाण्याः पतये इति बृहस्पतिविशेषणम् द्वेहशाय बृहस्पतये पैङ्गराजः पक्षिविशेषः॥ ॥अथ षोडशोऽवकाशो। अलजः पक्षिविशेषः आन्तरिक्षः अन्तरिक्षदेवतः। प्लवः जलपक्षी मद्गुः कारण्डवः मत्स्यः ते नदीपतये। कूर्मः कच्छपः द्यावापृथिवीयः द्यावापृथिवीदेवतः॥३४॥

पुरुषमृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वनस्पतीनां कृकवाकुः सावित्रो हंसो वातस्य नाक्रो मकरः कुलीपयस्तेऽकूपारस्य ह्रियै शल्यकः॥३५॥

पुरुषमृगः पुंमृगः चन्द्रमसः। गोधा कालका पक्षिविशेषः दार्वाघाटः सारसः ते वनस्पतीनाम्। कृकवाकुः ताम्रचूडः सावित्रः सवितृदेवतः हंसः वातस्य नाक्रः मकरः कुलीपयः ते त्रयो जलचरविशेषाः अकूपारस्य समुद्रस्य त्रयाणां मध्ये द्वौ षोडशे॥ ॥अथसप्त

दऽवकाशे एकः कुलीपयः अकूपारस्य। अल्पकः श्वावित् ह्रियै देव्यै ॥३५॥

एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणां लोपाश आश्विनः कृष्णो रात्र्या ऋक्षो जतूः सुषिलीका त इतरजनानां जहका वैष्णवी ॥३६॥

एणी मृगी अह्नः आलभ्या। मण्डूको मूषिका तित्तिरिः ते त्रयः सर्पाणाम्। लोपाशो वनचरविशेषः आश्विनः अश्विदेवतः। कृष्णो मृगः रात्र्यै। ऋक्षः भल्लूकः जतूः सुषिलीका एतौ पक्षिविशेषौ ते त्रयः इतरजनानां देवानाम्। जहका गात्रसंकोचनी वैष्णवी विष्णुदेवत्या॥३६॥

अन्यवापोऽर्धमासानामृश्यो मयूरः सुपर्णास्ते गन्धर्वाणामपामुद्रो मासां कश्यपो रोहित्कुण्डृणाची गोलत्तिका तेऽप्सरसां मृत्यवेऽसितः ॥३७॥

अन्यवापः कोकिलाख्यः पक्षिविशेषोऽर्धमासानां पशुः। ऋश्यो मृगविशेषः मयूरः बर्ही सुपर्णो गरुत्मान् ते गन्धर्वाणां पशवः। उद्रः जलचरः कर्कटसंज्ञः अपां पशुः। कश्यपः कच्छपः मासां मासानाम्। रोहित् ऋश्यः कुण्डृणाची वनचरी [illegible] गोलत्तिकापि ते त्रयोऽप्सरसाम्। असितः कृष्णः पशुर्मृत्यवे ॥३७॥

वर्षाहूर्ऋतूनामाखुः कशो मान्थालस्ते पितॄणां बलायाजगरो वसूनां कपिञ्जलः कपोत उलूकः शशस्ते

निर्ऋत्यै वरुणायारण्यो मेषः ॥३८॥

वर्षाहूः वर्षाभूः भेकी ऋतूनाम्। आखुः मूषकः कशः मान्थालश्च तद्विशेषौ ते त्रयः पितॄणाम्॥ ॥अथैकोनविंशे। अजगरो महासर्पः बलाय। कपिञ्जलो वसूनाम्। कपोतः उलूकः शशः ते निर्ऋत्यै। आरण्यो मेषो वरुणाय॥३८॥

श्वित्र आदित्यानामुष्ट्रो घृणीवान्वार्ध्रीनसस्ते मत्याऽअरण्याय सृमरो रुरू रौद्रः क्वयिः कुटरुर्दात्यौहस्ते वाजिनां कामाय पिकः ॥३९॥

श्वित्रः श्वेतः पशुरादित्यानाम्। उष्ट्रः दीर्घग्रीवः घृणिवान् तेजस्वी पशुविशेषः संहितायां घृणिशब्ददीर्घः वार्ध्रीनसी कण्ठे स्तनवानजः ते त्रयो मत्यै देव्यै। सृमरः गवयोऽरण्याय देवाय। रुरुः मृगः रौद्रः रुद्रदेवतः क्वयिः पक्षिविशेषः॥ ॥अथ विंशेऽवकाशे। कुटरुः कुक्कुटः दात्यौहः कालकण्ठः ते त्रयो वाजिनां देवानाम्। पिकः कोकिलः कामाय॥३९॥

खड्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिꣳहो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः॥४०॥

इतिसꣳहितायांचतुर्थोनुवाकः॥४

इतिश्रीशुक्लयजुषिमाध्यन्दिनीयायांवाजसनेयसꣳहितायांदीर्घपाठेचतुर्विꣳशोऽध्यायः॥२४॥

खड्गो मृगविशेषो विश्वदेवदेवतः। एकः कृष्णः श्वा सारमेयः द्वि

तीयः कर्णो लम्बकर्णो गर्दभः तृतीयस्तरक्षुः मृगादनः ते त्रयो रक्षसां पशवः । सूकरः इन्द्राय । सिंहो मारुतः मरुद्देवतः । कृकलासः सरटः पिप्पका पक्षिणी शकुनिःपक्षी ते त्रयः शरव्यायै । एकः पृषतः मृगविशेषो विश्वेषां देवानां पशुर्भवति विश्वेभ्यो देवेभ्यो जुष्टं वियुनज्मीति योज्यः ॥ ॥ एवं षष्ठ्यधिकं शतद्वयमारण्यपशव उक्ताः ॥ ॥ अत्र द्वाविंशतिरेकादशिनः २२ सप्तविंशत्यधिकानि त्रीणि शतानि अश्वादयः सौर्यान्ताः ३२७ षष्ट्यधिकं शतद्वयं कपिञ्जलादयः पृषतान्ता आरण्याः पशवः २६० सर्वे मिलित्वा षट् शतानि नवाधिकानि पशवो भवन्ति ६०९ । श्लोकश्च षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि चेति ॥ तेष्वारण्याः सर्वे उत्स्रष्टव्या न तु हिंस्याः ॥ ४० ॥

इति श्री गिरिधरभाष्ये चतुर्थोऽनुवाकः ४

श्रीवेदार्थप्रदीपेन तमोहार्दं निवारयन्
पुमार्थांश्चतुरो देयाद्धर्मपुत्रो युधिष्ठिरः २४

श्रीमच्छुक्लयजुर्वेदान्तर्गतमाध्यन्दिनीशाखाध्येतृव्याघ्रपादान्वयविश्वामित्रपुराधिपश्रीमज्जयकिशोरदेववर्म्मात्मजरुक्मिण्यनृपतिगिरिप्रसादेन रचिते श्रीवेदार्थप्रदीपे गिरिधरभाष्येऽश्वमेधप्रकरणे देवतासम्बन्धविधायिपशुवर्णनो नाम चतुर्विंशोऽध्यायः २४ ॥

हरिः ओम्

ओं नमो यज्ञपुरुषाय

पञ्चात्मकं द्विरूपं च साधनैर्बहुरूपकम्
स्वानंददायकं कृष्णं ब्रह्मरूपं परं स्तुमः १

अ॰ १ शादं दद्भिरवकां दन्तमूलैर्मृदं बर्स्वैस्तेगान्दᳪष्ट्राभ्याᳪ सरस्वत्याऽअग्रजिह्वं जिह्वाया उत्सादमवक्रन्देन तालु वाजᳪ हनुभ्यामप आस्येन वृषणमाण्डाभ्यामादित्याँ श्मश्रुभिः पन्थानं भ्रूभ्यां द्यावापृथिवी वर्त्तोभ्यां विद्युतं कनीनकाभ्याᳪ शुक्लाय स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माण्यवार्या इक्षवोऽवार्याणि पक्ष्माणि पार्या इक्षवः॥१॥

ओं नमो याज्ञवल्क्याय

गिरिप्रसादसंज्ञेन श्रीवेदार्थप्रदीपके
पञ्चविंशोऽयमध्यायो वर्ण्यते वाजिमेधिकः २५

का॰ २०॰ ८॰ ४॰ ५॰ वनस्पतियागके अनन्तर स्विष्टकृद्यागसे पूर्व शूल विषं श्रपित मांसको प्रजापति + के अर्थ होमिके अमुष्मै स्वाहेति शादादित्यगन्त १–९ देवताओं और अश्वके अङ्गों के अर्थ घृतहोमें अनादेशे घृतस्योक्तत्वात्। और अग्निर्ᳪ हृदये नेत्यादि विश्वेभ्यो देवेभ्यः स्वाहेत्यन्ता ३९॰८–१३॰ आहुतियेंभी होमें अश्वमेधत्वात् तत्राग्निᳪ हृदये नेत्यादि पुरीतदित्यन्ता ३९॰८॰९॰ देवताओं र अश्वाङ्ग हैं ततः लोमभ्यः स्वाहेत्यादि द्यावापृथिवीभ्याᳪ स्वा

+ शाकिपत्नी अश्वइतिवचनात्

हे त्यन्ता १०-१३ प्रायश्चित्ताहुतयो द्विचत्वारिंशत् ॥ तत्र शादं दद्भि-
रित्यादि-पृथिवीं त्वचेत्यन्तः संहिता भागो ब्राह्मणं न मन्त्राः १-७
यजूंषि। शादादयो देवाः दन्ताद्यङ्गानि। ततः चतुर्गृहीत आज्य
कोले-लेकर शादाय स्वाहा दद्भ्यः स्वाहेत्यादि पृथिव्यै स्वाहेत्यन्तं जु-
हुयादित्येकः पक्षः शाखान्तरोदितः। शादं दद्भिः प्रीणामि स्वाहेत्या-
दि होम मन्त्राः। देवता भोक्त्री द्वितीयया निर्दिश्यते अश्वाङ्गं भोग्यं
तृतीयया करणविभक्त्या निर्दिश्यते। क्वचित्केवला देवतैव यथा
शुक्लाय स्वाहा कृष्णाय स्वाहेति क्वचिदन्यविभक्त्यैव द्रव्यदेवतयो
निर्देशः यथा अग्नेः पक्षतिर्वायोर्निपक्षतिरिति। तथा च श्रुतिः
१३.३.४.१. शादं दद्भिरवकां दन्तमूलैरित्याज्यमवदानानि कृ-
त्वा प्रत्याख्यायं देवताभ्य आहुतीर्जुहोति या एव देवता अपिभागा-
स्ता भागधेयेन समर्धयतीति। अस्यायमर्थः। शादं नाम देवमश्व-
स्य दद्भिर्दन्तैः प्राणमीति शेषः स्वाहाकारो दानार्थः ततश्च शा
दं दद्भिः प्रीणामि स्वाहेति एवमन्यान्यपि योज्यानि। आज्यमव
दानानि कृत्वा आज्यमेवाश्वाङ्गत्वेन परिकल्प्य प्रत्याख्याय-
मवदानमवदानं प्रति शादादिदेवता आख्यायाख्या याज्या हु
तीर्जुहोति संकल्पिताश्वाङ्गभावा घृताहुतीः शादादिभ्यो ददाति
एवं कुर्वन्नपिभागाः कल्पितभागास्ता भागेन समर्धयति प्रीणा
तीत्यर्थः ॥ अथ संहितार्थः। अश्व के दान्तों करि शाद देवताको
प्रीणामि तृप्त करताहूं। दांतों की जड करि अवका देवताको प्री०
दान्तोंकी पीठि करि मृद देव०। दंष्ट्राओं करि तेगा दे०। जिह्वाके अ-

+ शादादयो प्रसिद्धा देवाः आदित्यादयः प्रसिद्धाः।

ग्रकरि सरस्वती दे॰। जिह्वाक॰ उत्साद दे॰। तालु॰ अवक्रन्द॰। हनु-
ओं (वक्त्रैक देश॰) वाज॰। मुख॰ आपो॰। आण्डो (वृषणों॰) वृषण॰।
श्मश्रुओं (मुखकेशों॰) आदित्यों॰। भ्रूओं (ललाटगरोम पङ्क्तिओं॰) पन्था-
न॰। वर्तओं (पक्ष्मपङ्क्तिओं॰) द्यावापृथिवी॰। कनीनकाओं (नेत्रकीपु-
तली॰) विद्युत॰। शुक्लायस्वाहा कृष्णाय स्वाहा देवोद्देश एव नत्वङ्गम्
शुक्लाय कृष्णाय देवाय सुहुतमस्तु यद्वा चतुर्थ्याश्वाङ्गमेव निर्दिश्य
ते प्राजापत्यो ऽश्व इति वचनाद्देवो ऽध्याहर्तव्य शुक्ल और कृष्ण अश्वके
अङ्ग करि प्रजापतिको प्री॰ एवं लोमभ्यः स्वाहेत्यादावपि बोध्यम् ३९॰
१०—१३॥ पक्ष्मों (नेत्रोपरि लोमों ऊपर के पलक की बिरूपनियों॰) पार॰। इ-
क्षुओं॰ (नेत्राधो भागरोमों नीचेके पलककी बिरूनीं॰) अवार॰। विपरी-
तं वा अवार्याणि (अवार देवत्यानि) पक्ष्माणि इक्षव पार्याः (पार देवत्याः) ॥१॥

अ॰ २ वातं प्राणेनापानेन नासिके उपयाम मधरेणौष्ठेन स-
दुत्तरेण प्रकाशेनान्तरमनूकाशेन बाह्यं निवेष्यं मूर्ध्ना
स्तनयित्नुं निर्बाधेनाशनिं मस्तिष्केण विद्युतं कनीन-
काभ्यां कर्णाभ्याᳪं श्रोत्रᳪं श्रोत्राभ्यां कर्णौ तेदनीम-
धर कण्ठेनापः शुष्ककण्ठेन चित्तं मन्याभिरदितिᳪं
शीर्ष्णा निर्ऋतिं निर्जर्जल्पेन शीर्ष्णा संक्रोशैः प्राणान्रे-
ष्माणᳪं स्तुपेन॥२॥

अश्वकी प्राण वायु करि वात को प्री॰। अपान वायु॰ नासिका संज्ञक
दो देवताओं॰। नीचेके ओष्ठ॰ उपयाम दे॰। ऊपर के ओष्ठ॰ सत्संज्ञक
दे॰ प्रकाश (ऊपर के देहकी कान्ति॰) अन्तर दे॰। नीचे के देह की का-

न्ति० बाह्यदे०। मस्तक० निवेष्य०। शिरोऽस्थि मध्य संलग्न मज्जाभाग० स्तनयित्नु०। शिरोमध्यस्थ जर्जर मांसभाग (मस्तक मज्जा †)० अश-नि०। कनीनकाओं० विद्युत०। कर्णों (कर्णशष्कुलीओं)० श्रोत्र (अत्राध्या-त्मिक एव देवता)० श्रोत्रेन्द्रियों० कर्णों०। कण्ठाधोभाग० नेदनीदे०। कण्ठ के निर्मांस देश० आपदे०। मन्या (ग्रीवाके पीछे की नाडियों)० चि-त्त०। शिर० अदिति०। नितरजर्जरीभूत शिरभाग० निर्ऋति०। संक्रोशों (चलते हुए अश्वके बोलनेवाले अङ्गों)० प्राणदेवताओं०। स्तुप (शिखा-भूतअङ्ग)० रेष्माण०॥२॥

+ शीर्षभागे

अ० ३ मशकान्केशैरिन्द्रꣳस्वपसा वहेन बृहस्पतिꣳ शकुनि-सादेन कूर्मांञ्छफैराक्रमणꣳस्थूराभ्यामृक्षलाभिः क-पिञ्जलाञ्जवं जङ्घाभ्यामध्वानं बाहुभ्यां जाम्बीलेना-रण्यमग्निमतिरुग्भ्यां पूषणं दोर्भ्यामश्विनावꣳसाभ्या-ꣳरुद्रꣳरोराभ्याम्॥३॥

केशों (स्कन्धरोमों)० मशक देवताओं०। वह (स्कन्ध)० इन्द्र०। कैसे वह क-रिकि स्वपसा शोभन है अप० कर्म अर्थात् धारण नरवहनादि कर्म जिस-का। शकुनि (पक्षीवत्) साद (गमन) वेगवत् कूदना तिस करि बृहस्पति० खुरों० कूर्म देवताओं०। गुल्फों० आक्रमण०। ऋक्षलाओं (गुल्फाधःस्थाना-डियों)० कपिञ्जल देवताओं०। जङ्घाओं (गुल्फजानुओं के मध्यभाग)० जव०। बाहुओं (अगिले पैरकी जानुओं के ऊर्ध्वभाग)० अध्वान०। जाम्बी-र (जम्बीर तरु के फल सदृश जानु मध्यभाग)० अरण्य०। अत्यन्त रो-चमानों (जानुदेशों)० अग्नि०। करों (अगिली जानुओं के अधोदेशों)०

पूषा०। अंसौ (स्कन्धौ) ० अश्विनी कुमारौ०। रोरौ (अंसग्रन्थिकौ) ० रुद्र०॥३॥

अ० ४ अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीया सोमस्य च तुर्थ्यदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुताᳮ सप्तमी बृहस्पतेरष्टम्यर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी॥४॥

अत्र षष्ठ्या देवतोद्देशः प्रथमयाऽङ्गोद्देशः ततोऽस्त्वित्यध्याहारः। अग्नेः देवस्य पक्षतिरस्तु। पक्षः साध्यविरोधयोः बले काले पतत्रे च रुचौ पार्श्वे प्रकल्प्यते इत्यभिधानोक्तेरत्र पक्षः पार्श्ववाची पक्षस्य मूलं पक्षतिः पक्षात्तिरिति पा० ५।२।२५। मूलार्थे तिप्रत्ययः ततः पक्षस्य पार्श्वस्य मूलभूतान्यस्थीनि वङ्क्रिशब्दवाच्यानि पक्षतिशब्देनोच्यन्ते तानि च प्रतिपार्श्वं त्रयोदश भवन्ति षड्विंशतिरश्वस्य वङ्क्रय इति श्रुतेः कौषीत० ब्रा० १०।४। तेषां क्रमेण देवतासम्बन्धं वक्ति। तत्रादौ दक्षिणपार्श्वास्थ्ना देवता आह अग्नेः पक्षतिः। दक्षिणपार्श्वका पहिला अस्थि अग्निदेवता का हो विभक्तिव्यत्ययो वा पक्षति करि अग्नि देवता को प्रीणामि तृप्त करता हूं। निपक्षति द्वितीया पक्षति वायु देवता०। तृतीया पक्षति इन्द्रस्येत्यादीनि स्पष्टानि॥४॥

अ० ५ इन्द्राग्न्योः पक्षतिः सरस्वत्यै निपक्षतिर्मित्रस्य तृतीयापां चतुर्थी निर्ऋत्यै पञ्चम्यग्नीषोमयोः षष्ठी सर्पाणाᳮ सप्तमी विष्णोरष्टमी पूष्णो नवमी त्वष्टुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यम्यै त्रयोदशी द्यावापृ

थि॒व्यो द॑क्षि॒णं पा॒र्श्वं वि॒श्वे॑षां दे॒वाना॒मुत्त॑रम् ॥ ५ ॥

अथ वामपार्श्वास्थ्नां देवानाह। प्रथम(उपरिस्थ)वामपार्श्वास्थि इन्द्राग्नि देवताओं का हो। द्वितीया पक्षति सरस्वती का हो इत्यादि स्पष्टानि॥ अथ समस्तयोः पार्श्वयो र्देवानाह॰ दक्षिणपार्श्व द्यावापृथिवी का हो। उत्तर वामपार्श्व सब देवताओं का हो ॥ ५ ॥

अ॰ ६ म॒रुता॑ꣳ स्क॒न्धा वि॒श्वे॑षां दे॒वानां॑ प्रथ॒मा कीक॑सा रु॒द्राणां॑ द्वि॒तीया॑दि॒त्याना॑ं तृ॒तीया॑ वा॒योः पुच्छ॑म॒ग्नीषोम॑यो॒र्भास॑दौ कु॒ञ्चौ॑ श्रोणि॑भ्यामि॒न्द्राबृह॒स्पती॑ ऊ॒रुभ्यां॑ मि॒त्राव॑रु॒णाव॒ल्गाभ्या॑मा॒क्रम॑ण॒ꣳ स्थू॒राभ्यां॑ बल॒ं कुष्ठा॑भ्याम् ॥ ६ ॥

अथाङ्गान्तराणां देवता आह। विभक्ति व्यत्ययः। स्कन्ध प्रदेशों करि मरुत् देवताओं को प्री॰। कीकस(पुच्छ के ऊपर की प्रथमा अस्थिपङ्क्ति) विश्वे देवाओं को॰। द्वितीयास्थिपङ्क्ति॰ रुद्रों॰। तृतीयाकीकस॰ आदित्यो॰। पुच्छ॰ वायु॰। भासदो(नितम्बों-चूतडों)॰ अग्नीषोम देवताओं॰। श्रोणियों(दक्षिणवाम कटिप्रदेश)॰ कुञ्चौ॰। ऊरूओं॰ इन्द्राबृहस्पती॰। अल्गाओं(दोंनो ऊरूसन्धिओं)॰ मित्रावरुणौ॰। स्थूरों(नितम्बों के अधोभागों)॰ आक्रमण॰। कुष्ठो(ककुन्दरों)॰ बल देवता को॰ ॥ ६ ॥

अ॰ ७ पू॒षणं॑ वनि॒ष्ठुना॑न्धा॒हीन्त्स्थू॒लगु॒दया॑ स॒र्पान्गुदा॑भिर्वि॒ह्रुत॑ आ॒न्त्रैर॒पो व॒स्तिना॒ वृष॑ण॒मा॒ण्डाभ्यां॒ वाजि॑न॒ꣳ शेपे॑न प्र॒जाꣳ रेत॑सा॒ चाषा॑न्पि॒त्तेन॑ प्रद॒रान्पा॒युना॑ कू॒श्मा॒ञ्छ॑कपि॒ण्डैः ॥ ७ ॥

वनिष्ठुः(स्थूलान्त्र) करि पूषा देवता को प्री॰। स्थूलगुदा॰ अन्धसर्पों॰।

स्थूल गुदातिरिक्त गुदभाग॰सर्पों॰। अन्त्र सम्बधि मांसभाग॰ विह्रुतदेवताओं॰। वस्ति (नाभि के नीचे वर्तमान मूत्रपुट)॰ आपो देवता:॰। आण्डों(लिङ्गोभय पार्श्वस्थों मांसपिण्डों)॰ वृषण॰। शेप (लिङ्ग)॰ वाजिन दे॰। रेत(वीर्य) प्रजा दे॰। पित्त(पित्ताधातुविशेषः) चाष देवताओं॰। पायु (गुदा के तीसरे भाग) अदर देवताओं॰। शाक(विष्ठा के पिण्डों)॰कूश्मदेवताओं॰॥७॥

अ॰८ इन्द्रस्य क्रोडो॓ऽदित्यै पाजस्यं दिशां जत्रवो॓ऽदित्यै भसज्जीमूतान्हृदयोपशेनान्तरिक्षं पुरीतता नभ उदर्येण चक्रवाकौ मतस्नाभ्यां दिवं वृक्काभ्यां गिरीन्प्लाशिभिरुपलान्प्लीह्ना वल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हिराभिः स्रवन्तीर्ह्रदान्कुक्षिभ्याᳬसमुद्रमुदरेण वैश्वानरं भस्मना॥८॥

पुनर्देवे षष्ठी अङ्गे प्रथमा। क्रोड(वक्ष्यका मध्यभाग) इन्द्र देवताका हो अथवा क्रोड करि इन्द्र देवता को प्री॰। पाजस्य (बलकर अङ्ग) अदिति। जत्रुओं (अंस कक्षओं की संधि) दिशा देवताओं॰। भसत्(लिङ्गका अग्र भाग) अदिति॥ पुनर्देवे द्वितीया अङ्गे तृतीया। हृदयस्थ मांसकरि जीमूतों को प्री॰। पुरीतत्(हृदयाच्छादक अन्त्र)॰ अन्तरिक्ष॰। उदरस्थ मांस॰ नभ॰। मतस्नाभ्यां (ग्रीवाधस्ताद्भाग स्थित हृदयोभय पार्श्वस्थे अस्थिनीओं॰) चक्रवाकौ॰। वृक्का (मुख्य मांस)॰ दिव दे॰। प्लाशियों(शिश्नमूलनाडियें तिन्ह नाडियोंकीही द्वारा अन्न देही में चलता है तिन्हों)॰ गिरी देवताओं॰। प्लीहा(हृदयके वामभाग में सिथल मांसभाग पुप्पुस

+ वृक आदाने वृकशते स्वादुतया गृह्यते वृक्का नाम। पुरस्य वक्षिपार्श्वे इति श्री स्वामी। वृक्का कुक्षिस्थौ मांसगोलकौ वाकृफलाकारौ इति याज्ञिकाः।

संज्ञ है तिस)० उपल देवताओं०। क्लोमाओं० + वल्मीक देवताओं०। ग्लो (ग्लावों-हृदयनाडियों)० गुल्म देवताओं०। हिराओं(अन्नवाहिनीनाडिओं)० स्रवन्तिः देवताः०। कुक्षी(जठरकेदक्षवामभाग)० ह्रद देवताओं०। उदर(पेट)० समुद्र०। अङ्गोत्थ भस्म करि वैश्वानर देवता को प्रीणामि॥८॥

अ०९ विधृतिं नाभ्या घृतꣳ रसेनापो यूष्णा मरीचीर्विप्रुड्भिर्नीहारमूष्मणा शीनं वसया प्रुष्वा अश्रुभिर्ह्रादुनीर्दूषीकाभिरस्ना रक्षाꣳसि चित्राण्यङ्गैर्नक्षत्राणि रूपेण पृथिवीं त्वचा जुम्बकाय स्वाहा॥९॥

नाभि (उदर के नीचेकी ग्रन्थि) करि विधृति देवता को प्रीणामि। रस(वीर्य धातुविशेष)० घृत दे०। यूष्ण(पक्कान्नरस)० आप दे०। विप्रुट(वसाविन्दुओं)० मरीची०। ऊष्णा(शरीरगत ऊष्णता)० नीहार०। वसा०(मांसस्नेह)* शीन०। दूषिका(नेत्रों केमल)० ह्रादुनी०। असृक्(रुधिर)० राक्षसों०। अङ्गों(पूर्वोक्त अवयवों)० चित्र देवताओं०। रूप(सौन्दर्य)० नक्षत्र देवताओं०। त्वचा(चर्म)० पृथिवी देवी को प्रीणामि स्वाहेति मन्त्रों से आज्यको होमें इत्यर्थः॥का०२०।८।१६। अवभृथ याग के अन्त में जल विषें मग्न पिङ्गलाक्ष खल्वाट दन्तुर अतिगौर पुरुष के शिर पर जुम्बकायेति मन्त्र से सकृगृहीत आज्य को होमें॥ वरुण देवत्या द्विपदा यजुर्गायत्री उदन्यपुत्र मुण्डिभदृष्टा। जुम्बकाय- वरुण के अर्थ स्वाहा-सुहुतमस्तु। वरुणो वै जुम्ब इति श्रुतेः। एषा चान्तर्जले जप्ता पापनाशिनी कात्या० सर्वा० अध्या०३। खण्ड ५। तथाचोक्तं हारीतेन- जुम्बका नाम गायत्री वेदे वाजसनेयके। अन्तर्जले सकृज्जप्ता ब्रह्महत्यां व्यपोहति॥९॥

+ क्लोमा उदर्यो जलाधारः। हृदयस्य दक्षिणे यकृत्क्लोमा वामे प्लीहा फुप्फुसश्चेति वैद्या इति क्षीरस्वामी क्लोमा गलनाडीति कर्कः॥

* वसा(मांस इत्यमरः २।६।६४। शुद्धमांसस्य यः स्नेहः सा वसेति वैद्या इति स्वामी

अ॰ १० हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥१०॥

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशेऽस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥११॥

चतस्रः कदेवत्याः त्रिष्टुभः प्रजापतिसुतहिरण्यगर्भदृष्टाः प्राजापत्यपशूनामश्वादीनां याज्यानुवाक्याः द्वे व्याख्याते १३।४॥१०॥२३।३॥११॥

यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाहुः। यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम॥१२॥

हम कस्मै(प्रजापति के अर्थ) हवि देते हैं। इन हिमाचल प्रभृति पर्वतों को जिस प्रजापति का महिमान कहिते हैं पण्डितलोग। नदियोंसहित समुद्र को महिमान कहिते हैं। ये पूर्वाद्या प्रकृष्टा दिशाएँ जिसका महित्व कहते हैं जिस की बाहुएँ जगद्रक्षण को इति शेषः। अर्थात् सब जगत् जिस प्रजापति की विभूति है॥१२॥

य आत्मदा बलदा यस्य विश्वऽउपासते प्रशिषं यस्य देवाः। यस्य च्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम॥१३॥

कस्मै देवाय हविषा विधेमेति व्याख्यातम्। जो प्रजापति आत्मदा(आत्माको देता, उपासकों का सायुज्यप्रदः)बलदा(सामर्थ्य देता, मुक्तिमु-

क्तिमदः। सब मनुष्य जिसके प्रशिष(शासन)को उपासते और देवता जिसके प्रशिष को उपासते +। किंच जिस की छाया(आश्रय ज्ञानपूर्वक उपासन) अमृत(मुक्तिहेतु) और जिसका अज्ञान(न जानना) इति शेषः मृत्यु(संसारहेतु) है ‡॥१३॥

अ॰११ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासोऽअपरीतास उद्भिदः। देवा नो यथा सदमिद्वृधेऽअसन्नप्रायुवो रक्षितारो दिवे-दिवे॥१४॥

वैश्वदेव पशु वपा पुरोडाशपशूनां याज्यानुवाक्या दश ऋचो विश्वदेवदेवत्या गोतमदृष्टाः। तत्रादौ पञ्च जगत्यः। क्रतवः(यज्ञ वा संकल्प) हमारे प्रति आवें अर्थात् हम यज्ञ कर्त्ता होवें। कैसे क्रतवः कि कल्याण कारिणः। तथा निर्विघ्नाः। अपरीता(अज्ञाताः केनचित्फलानुमेया इत्यर्थः। उद्भिदः(यज्ञान्तरों के प्रकटी कर्त्तार)। किंच जिस प्रकार करि देवता हमारी सदैव वृद्धि के अर्थ हों तैसे क्रतवः आवें। कैसे देवता कि अप्रायुवः(अनालसाः) हमारी वृद्धि के अर्थ हों तथा प्रतिदिन पालक हों॥१४॥

देवानां भद्रा सुमतिर्ऋजूयतां देवानाꣳ रातिरभि नो निवर्त्तताम्। देवानाꣳ सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे॥१५॥

कल्याण कारिणी देवताओं की शोभना बुद्धि हमारे प्रति अभिमुखी हो। कैसे देवताओं की कि ऋजूयताम्(अवक्रगामियों वा साधु यजमान कामयमानों की। किंच देवताओं का दान हमारे अभिमुख हो अर्थात्

+ पञ्चसप्तावधि ज्ञानं शिक्षावधि च शासनम्। कार्यावधि च कर्त्तृत्वं स स्वयम्भूः प्रजापतिः॥

‡ तदुक्तम् येतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्तीति श्वेताश्वतरोपनिषत् ३।१०॥

देवता हमारे अर्थ दें। देवताओं की मैत्री को प्राप्त हों। देवता हम मित्रों की आयु को बढावें ॥१५॥

तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम्। अर्यमणं वरुणꣳ सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥१६॥

पूर्वया (प्राचीना, अकृत्रिमा, स्वयम्भुवा) निविदा (वेदरूपवाचा) करि हम तिन (प्रसिद्ध) देवताओं को बुलाते हैं। तिन किन्हें तत्राह भग को मित्र अदिति (देवमाता) दक्ष (प्रजापति) अर्यमा वरुण सोम अश्विनी कुमारों को। अस्रिधम् इति भगादीनां विशेषणम् अच्युतों को। किंच सुभगा (शोभनभाग्या) सरस्वती भगादि सहिता हमारा सुख करै ॥१६॥

तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः। तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥१७॥

पवन हमारे को औषध हित जैसे तैसे वहै अर्थात् अनुग्रह करै वा हित देवै कैसा हित कि मयो भु (सुखोत्पादक। माता (जगत की निर्माण करनेवाली) पृथिवी तिसहित को दे। पिता (पालक) स्वर्ग हित दे। सोमाभिषव करनेवाले पाषाण तिस भेषज को दें। कैसे हैं पाषाण कि सुख के देनेवाले। हे अश्विनी कुमारो तुम तिस वातादिकों से भेषज प्रार्थन को सुनों अर्थात् तुमभी हित देओ। कैसे हो तुम कि गृहवत् धारण करने वाले ॥१७॥

तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम्।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥१८॥

हम तिस (प्रसिद्ध) ईशान रुद्र को बुलाते हैं। कैसे तिसे कि जगतः (जङ्गम) और स्थुषः (स्थावर) भूतजात के पति को। वुद्धि संतोष कारक को किस लिये वुलाते हैं कि तृप्ति करने को यथा (जिस प्रकार से) पूषा हमारी वृद्धि और कल्याण के अर्थ हो तैसे वुलाते हैं। कैसा पूषा कि वेदसां धनों वा ज्ञानों का रक्षक। पालक पुत्रादिकों का। अनुपहिंसित॥१८॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥१९॥

विराट्स्थाना त्रिष्टुप्। इन्द्र हमारे अर्थ स्वस्ति (अविनाशशुभ) देवै। कैसा है इन्द्र कि वृद्धश्रवाः (बडी है कीर्ति जिसकी वोह)। पूषा हमारे अर्थ स्वस्ति देवै कैसा कि विश्ववेदाः (सबधन जिस का वा सब जानता। तार्क्ष्य (रथवा गरुड) हमारे अर्थ स्वस्ति देवै कैसा कि अरिष्टनेमिः (अनुपहिंसित हैं चक्रधारा वा पक्ष जिस के। बृहस्पति (देवताओं का गुरु हमारे अर्थ स्वस्ति देवै॥१९॥

पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः। अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसागमन्निह॥२०॥

जगती। मरुतो देवाः अन्न (हविर्लक्षणहेतु) करि इस यज्ञ में आवें। कैसे मरुतः कि पृषदश्वा, पृषती संज्ञा हैं अश्वा (वडवा वाहन†) जिन्हों

† पृषत्यो मरुतामितिनिघ॰१॰१५॰

के ते यद्वा पूबल हैं अश्व जिन्हों के ते। पृश्नि (द्यौ-गौ-दिति वा) जननी जिन्हों की ते। शुभ (कल्याण) को प्राप्त होते वा करते हैं। विदथों (यज्ञगृहों) में गमन शील हैं। अग्निजिह्वा (अग्नि है जिह्वा भोजन साधन जिन्हों की ते)। मनवः (सर्वज्ञाः)। सूरचक्षः (सूर्य है चक्षु जिन्हों का वा सूर्य को देखते। किंच केवल मरुत ही नहीं सब देवता भी हमारे यज्ञ में आवें॥२०॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः॥२१॥

तिस्त्रस्त्रिष्टुभः। हे देवताओ श्रोत्रों से भद्र (कल्याण-अनुकूल्य) हम सुनें। हे यजत्राः (यजन्तं त्रायन्ते-यजमान पाल को) नेत्रों से हम भद्र देखें। किंच देवहित (देवताओं करि स्थापित वा देवताओं की उपासना योग्य) जो आयु (जीवन) तिसे हम प्राप्त होवें। कैसे हैं हम कि स्थिर (दृढ) अङ्गों (अवयवों कर चरणादिकों) से और तनूः (शरीर वा पुत्रादिकों से युक्त) तुष्टुवाꣳसः तुम्हें स्तुति करते॥१॥

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः॥२२॥

हे देवताओ शतवर्ष पर्यन्त तुम समीप में होओ इति शेषः। जहां शत शरद में हमारे शरीरों की तुम जरा करो अर्थात् वार्धकावधि तुम समीप में होओ। यत्र-हमारे पुत्र पितर हों (पुत्रवन्त हों) अर्थात् जब तक हमारे पौत्र हों तब तक मध्य में हमारी आयु मत नष्ट करो। कैसी आयु कि गन्तोः (गमनशील)॥२२॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम्॥२३॥

मन्त्रदृक् सर्वात्मकत्वेनादितिं स्तौति। स्वर्ग अदिति है (तदधिष्ठातृत्वात् एवमग्रेपि। अन्तरिक्ष अदिति है। माता और पिता वोह ही अदिति है। पञ्चजनाः (मनुष्य) भी अदिति है। किं बहुना उत्पन्न हुए प्राणीजात और होनेहार अदितिही है॥२३॥

अ० १२ मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परिख्यन्। यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि॥२४॥

का० २०·८·७·मा न इत्यादि षोडशकण्डिकात्मक दो अनुवाकोंसे पूर्ववत् चतुर्गृहीत आज्य लेकर होमें और षोडशाश्वस्तोमीया जुहोतीति १३·३·५·५·श्रुति में मानो· यदश्वस्य·ये दो अष्टक कहे हैं। द्वाविꣳशत्यृचमश्वस्तुति कात्या·सर्वा·खंड ५·द्वाविंशति र्ऋचो·श्वस्तुति परत्वादश्वदेवत्यास्त्रिष्टुभो दीर्घतमोदृष्टाः अत्र एष छाग इति २६· तृतीया यूपव्रस्का इति २८· षष्ठी एते द्वे जगत्यौ। ततः षोडशों से होम छैओं से स्तुति वा सबो से होम है अश्वस्तोमीयꣳहुत्वा द्विपदा जुहोतीति १३·३·५·३·श्रुतेः॥ अथ मन्त्रार्थः। विदथ(यज्ञ) में अश्व के वीर्यो (चरित्रो) को जो कि हम उच्चार करते हैं तहां मित्रादयः देवाः हमारे को निन्दा न करें अस्माभिर्देवाः स्तुत्या न त्वश्वादयस्तिर्यञ्च इति यद्यपि निन्दोचिता तथाप्यश्वरूपेण देवानामेव स्तुतिः क्रियते। अथवा महानुभाव देवजात अश्वको तुछ मनुष्य

स्तुति करते हैं यह न कहें। कैसे अश्व के कि वाजिनः (वेगवान) देवजात (सूर्यसे उत्पन्न वा देवताओं करि उत्पन्न कराए हुए) के †। सप्तेः (देवताओं सहित जोडियेहे तिसके। केमानिन्द्रन्तु तानाह० मित्रः (अहरभिमानीदेवः) वरुणः (रात्र्यभिमानीदेवः) अर्यमा (आदित्य) आयु (वायु) इन्द्रः (देवराजः) ऋभुक्षाः (ऋभवोदेवाः जहां निवास करते हैं वोह देवाधार) प्रजापति वा सबको व्याप्त इन्द्रविशेषणं वा ॥२४॥

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति। सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ॥२५॥

जब कि विप्रलोग अश्व के मुखाग्र में गृहीत राति (दान० आज्यसक्तुधानालक्षण) को प्राप्त करते हैं † तब अज (छाग) भक्षण के अर्थ प्राप्त होताहै। कैसा अज कि सुप्राङ (भले प्रकार पूर्व को जाता अर्थात् ललाट में बँधा †। तथा मेम्यत् (शब्दानुकरणम् मे-मे यह शब्द करता। विश्वरूपः (सर्वरूप० नानावर्णकिंच इन्द्रापूष्णोः (इन्द्र और पूषा के) प्रिय (इष्ट) पाथ (अन्न० पशुलक्षण) को भक्ष के अर्थ वोह नाभिबद्ध आताहै † अर्थात् हुतशेष अन्न जब अश्व के अर्थ दियाजाताहै तब ललाट नाभि बद्ध छाग भक्ष के अर्थ आते हैं। कैसे अश्व के कि निर्णिजा (स्नानकरि प्रावृत संस्कृत स्नापित के। तथा रेक्णसा (धनकरि ⁑) प्रावृत (आच्छादित) के ⁑॥२५॥

एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः। अभिप्रियं यत्पुरोडाशमर्वता त्वष्टेदेनं सौश्रवसा

* सोमापौष्णः श्यामो नाभ्यामित्युक्तेः २४।१।

⁑ धन (सौवर्णमणिलक्षण० एकशतं० एकशतसुवर्णमणियें) को भूरित्यादिमन्त्रेणमहिष्यादि तीनों पत्नियाँ अश्व के शिर आदि केसरों में बांधती हैं इत्युक्तम् २३।८।

† स्तुतिर्वा सर्वा उचितत्वात् ...
† ललाटेनपुरोऽजोनाभिं नाभ्यामित्युक्तेः ...
† नाभ्यामाग्नेयोऽजोनाभ्यामित्युक्तेः २४।१।

अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः।
विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒ जना॒ अदि॑तिर्जा॒तमदि॑तिर्ज॒-
नि॑त्वम्॥२३॥

मन्त्रदृक् सर्वात्मकत्वेनादितिं स्तौति। स्वर्ग अदिति है (तदधिष्ठातृत्वात् ए-
वमग्रेपि। अन्तरिक्ष अदिति है। माता और पिता वोह ही अदिति है पञ्चज-
नाः (मनुष्य) भी अदिति है। किं बहुना उत्पन्न हुए प्राणीजात और होनेहा-
र अदिति ही है॥२३॥

अ० १२ मा नो॑ मि॒त्रो वरु॑णो॒ अर्य॒मा॒युरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑-
ख्यन्। यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒-
र्या॑णि॥२४॥

का० २०। ८। ७। मान इत्यादि षोडश कण्डिकात्मक दो अनुवाकों से पूर्ववत्
चतुर्गृहीत आज्य लेकर होमें और षोडशाश्वस्तोमीया जुहोतीति १३।३।
५।५। श्रुति में मानो। यदश्वस्य। ये दो अष्टक कहे हैं। द्वाविंशत्यृचमश्व-
स्तुति कात्या० सर्वा० खंड ५। द्वाविंशतिर्ऋचो ऽश्वस्तुतिपरत्वादश्वदेवत्या-
स्त्रिष्टुभो दीर्घतमोदृष्टाः अत्र एष छाग इति २६। तृतीया यूपव्रस्का इति २६।
षष्ठी एते द्वे जगत्यौ। ततःषोडशों से होम छेओं से स्तुति वा सबो से होम
है अश्वस्तोमीयं हुत्वा द्विपदा जुहोतीति १३।३।५।३। श्रुतेः॥ अथ मन्त्रा-
र्थः। विदथ (यज्ञ) में अश्व के वीर्यो (चरित्रों) को जो कि हम उच्चार करते
हैं तहां मित्रादयः देवाः हमारे को निन्दा न करें अस्माभिर्देवाः स्तुत्या
न त्वश्वादयस्तिर्यञ्च इति यद्यपि निन्दोचिता तथाप्यश्वरूपेण देवाना-
मेव स्तुतिः क्रियते। अथवा महानुभाव देवजात अश्व को तुच्छ मनुष्य

स्तुति करते हैं यह न कहें। कैसे अश्व के कि वाजिनः (वेगवान) देवजात (सूर्य से उत्पन्न वा देवताओं करि उत्पन्न कराए हुए) के † । सत्रेः (देवताओं सहित जो तियै है तिस के। कैमानि न्दन्तु तानाह॰ मित्रः (अहरभिमानीदेवः) वरुणः (रात्र्यभिमानीदेवः। अर्यमा (आदित्य) आयु (वायु) इन्द्रः (देवराजः) ऋभुक्षाः (ऋभवोदेवाः जहां निवास करते हैं वोह देवाधार) प्रजापति वा सबको व्याप्त इन्द्रविशेषणं वा ॥२४॥

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति। सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ॥२५॥

जब कि विप्रलोग अश्व के मुखाग्र में गृहीत रातिं (दान॰ आज्यसक्तुधानालक्षण को प्राप्त करते हैं † तब अज (छाग) भक्षण के अर्थ प्राप्त होता है। कैसा अज कि सुप्राङ (भले प्रकार पूर्व को जाता अर्थात् ललाट में बँधा † । तथा मेम्यत् (शब्दानुकरणम् मे-मे यह शब्द करता। विश्वरूपः (सर्वरूप॰ नानावर्ण) किंच इन्द्रापूष्णोः (इन्द्र और पूषा के) प्रिय (इष्ट) पाथ (अन्न॰ पशुलक्षण) को भक्ष के अर्थ वोह नाभि बद्ध आता है † अर्थात् हुतशेष अन्न जब अश्व के अर्थ दिया जाता है तब ललाट नाभि बद्ध छाग भक्ष के अर्थ आते हैं। कैसे अश्व के कि निर्णिजा (स्नानकरि प्रावृत संस्कृत स्नापित के। तथा रेक्णसा (धनकरि ५) प्रावृत (आच्छादित) के ॥२५॥

एष छागः पुरोऽअश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः। अभिप्रियं यत्पुरोडाशमर्वता त्वष्टेदेनꣳ सौश्रवसा—

+ सोमापौष्णः श्यामो नाभ्यामित्युक्तेः २४।१।
५ धन (सौवर्णमणिलक्षण॰ एकशतं॰ एकशतसुवर्णमणियों) को भूरित्यादिमन्त्रेण महिष्याद्या तीनों पत्नियाँ अश्व के शिर आदि केसरों में बाँधती हैं इत्युक्तम् २३।८।

+ मुखाग्रे । रातिं गृभीतामित्युक्तेः २४।१।
+ आग्नेयः कृष्णग्रीव † लाटे इत्युक्ते । २४।१।
+ ललाट इति नाभि बद्ध इत्युक्तेः २४।१।

यं जिन्वति॥२३॥

जब कि यह छाग वेगवान अश्वकरि पुरस्तात् प्राप्त करियेहै (ललाट बद्धत्वात्) कैसा छाग कि पूष्णोभागः (पुष्णाति देवानिति पूषाग्नि तिसका भाग-भजनीय) तथा विश्वदेव्यः (सर्वदेवार्ह) है। तब त्वष्टा (प्रजापति) ही अर्व (अश्व) सहित इस छाग को तृप्त करता है। किसलिये कि सो श्रवस (सुकीर्ति) के अर्थ (यज्ञे मृतानां स्वर्गाप्ते रुक्तत्वात्)। कैसे इसे कि देवताओं के समन्तात् तृप्त करनेवाले। पुरोडाश (पुरस्ताद्दातव्य) को॥२६॥

यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति। अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः॥२७॥

मनुष्याः (ऋत्विजः) जब कि अश्व को तीनिवार पर्यग्नि करते हैं कैसे अश्व को कि हविर्योग्य। ऋतुशः (यज्ञकाल में) देवयान (देवताओं के प्रापणीय वा देवयानमार्गगामी यद्वा देव-आदित्यवत् गति जिसकी अर्थात् अनिवारितगति) को। इस समय (पर्यग्निकाल) में पूष्णः पोषक वा वृद्ध-अग्नि का भाग अज पुरोगामी हो चलता है। क्या करने कि देवताओं के अर्थ यज्ञ को प्रतिवेदयन् (प्रख्यापयन्-अपने शब्द करि जताने॥२७॥

होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शंस्ता सुविप्रः। तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आपृणध्वम्॥२८॥

हे होत्रादयः ऋत्विजः तिस (प्रसिद्ध) यज्ञ (अश्वमेध) करि वक्षणाः (नदी-

घृतकुल्याद्याः) आपृणध्वम् (घृतपयोदधिपयस्या पुरोडाश मांस से पूरण करो अर्थात् यज्ञ को सम्पादन करि फल को साधन करो। कैसे यज्ञ करि कि स्वलंकृत विग्रहविदेक्षणादि करि शोभित। सुष्टु इष्ट। के ऋत्विज स्तानाह- होता (आह्वान करने वाला देवताओं का तन्नामक ऋत्विक्। अध्वर्यु (अध्वर चाहाता। आवयाः (आभिमुख्येनावयति- प्रति प्रस्थाता। अग्निमिन्धः (अग्नि को जलाता। ग्रावग्राभः (ग्रावस्तोता। और शंशंस्ता (प्रशास्ता। सुविप्रः (मेधावी- ब्रह्मा सर्वविद्यः। अयमनुक्तर्त्विगुपलक्षकः। एते यज्ञेन वक्षणा आपृणध्वमिति सम्बन्धः॥२८॥

यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति। ये चार्वते पचनꣳ सम्भरन्त्युतो तेषामभिगूर्तिर्न इन्वतु॥२९॥

तिन ऋत्विजों का अभिगूर्ति (उद्यम) हमें तृप्त करे व्याप्त हो वा हमारे यज्ञ को भले प्रकार साधे। तिन किन्हों का कि जे यूप के लिये वृक्ष छेदते हैं और जे यूप को लाते हैं। और जे अश्वबन्धन यूप के अर्थ चषाल (यूप के अग्रभाग में स्थाप्य काष्ठ) को तक्षति (तक्षन्ति- साधु सम्पादन करते छीलते) हैं। और जे मुनुष्य अश्व के अर्थ पचन (पाकसाधन कुष्मांडादि लाते हैं तिन्हों का उद्यम हमें तृप्त०॥२९॥

उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः। अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम्॥३०॥

मन्म (मननीय फल) सुमत् स्वयं समीप प्राप्त हो वोह मननीयफल

सुरू करि धारणकिया। किंच यह वीत(पुष्ट)पुष्ट यद्वावीत(कामित) पृष्ठ अश्व+देवताओं के मनोरथों को पूरे इतिशेषः।किंच देवपुष्टि निमित्त जिस अश्व को हम शोभन बांधते हुए विप्राः(मेधाविनो)ऋषयः(मन्त्र दर्शिनो ऋत्विजः)उस अश्व को तोषें॥३०॥

यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य। यद्वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते ऽअपि देवेष्वस्तु॥३१॥

वेगवान अश्व की जो दाम(ग्रीवाबद्धा रज्जु)और जो संदान(पादबन्धनरज्जु)और जो शिरोबद्धा इस अश्व की रज्जु और भी कटिस्था रशना रज्जु है अथवा इस अश्व का घ(प्रसिद्ध)मुखमें प्रक्षिप्त तृण है। हे अश्व तेरे सब तिन देवताओं में(देवोपयोगीनि) हो वा देवत्व को प्राप्त हो(अत्रोपयुक्तानां सर्वेषां देवत्वमाशास्यते॥३१॥

अ॰ १३ यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति। यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते ऽअपि देवेष्वस्तु॥३२॥

मक्षिएं अश्व की क्रवि जो खाती हुई अथवा जो मांस स्वरु(पश्वञ्जनकाल+)लिप्त है। और जो स्वधित(ग्रास)में लिप्त है छेदन काल और अवदानकाल में। और जो शमिता के हाथों में और जो नखों में लिप्त है हे अश्व सब त्वदीय देव भोग्य हो॥३२॥

यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो ऽअस्ति। सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृत

पाकं पचन्तु ॥३३॥

उदर का ऊवध्य (थोडा जीर्ण तृण पुरीष +) जो नीचे चलता है। आम (अपक्व) के मांस का जो गन्ध (लेश) है विशसितारः तिस सबको सु संस्कृत करें। और मेध्य (अश्व) शृतपाक (देवयोग्य होवे पाक जिस कर्म में) जैसे तैसे पचें अर्थात् अतिपक्व और ईषत्पक्व न करें॥३३॥

+ भक्षितमपक्वमामशयस्थमूवध्यमुच्यते।

यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति। मा तद्भूम्यामाश्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥३४॥

हे अश्व अग्नि करि पच्यमान तेरे शरीर से जो ऊष्मा वा रस नीचे जाता है। तथा निः शेषेण हत का जो अङ्ग शूल करि किये पाक में निकलता है वोह निर्गत ऊष्माङ्गादिक भूमि में आश्लिष्ट न हो। तथा विशसन समय में तृणलग्न न हो। किं तर्हि वोह पतित तृणलग्न सब देवताओं के अर्थ दत्त हो। कैसे देवताओं के अर्थ किचाह करते हैं हविकी ॥३४॥

ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति। ये चार्वतो माꣳसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु ॥३५॥

जे मनुष्य अश्व को देखते हैं कि यह पक्व यह जानते हैं। और जे यह कहिते हैं क्या कि सुगन्धपाक हुआ अतः अग्नि के सकाश से उतारो। और जे मनुष्य अश्व के मांस की याचना करते हैं। उतो॰ अपि॰ च॰ और तिन्हों का उद्यम हमें तृप्त करे यद्यपि मन्त्रो देव परो व्याख्येयः।

